## विकारो वा तदुक्तहेतुः ॥ २० ॥

सिद्धान्तमाह । विकारो वेति । नित्यस्य होमार्थं विहितस्य विकारः । तत्कार्यकारी तत्स्थानापन्न इति यावत् । स चासावुक्तश्च तदुक्तहेतुः उक्तार्थसाधकश्चतुर्थे उक्तो हेतुरित्यर्थः । यश्च नियोगे काम-दर्शनादिति·पूर्वपक्षहेतुः तत्परिहारो भाष्यादवगन्तव्यः ॥ २० ॥

## वचनादसंस्कृतेषु कर्म स्यात् ॥ २१ ॥

यश्चासंस्कृतेषु कर्म स्यादिति हेतुः तं परिहरति । वचनादिति । न हि वचनस्यातिभार इति भावः ॥ २१ ॥

## संसर्गे चापि दोषः स्यात् ॥ २२ ॥

परोक्तहेतून् दूषयित्वा परपक्षे दोषमाह । संसर्गइति । नित्यका-म्ययोः संसर्गे दोषश्रवणात् । अग्नये शुचये ऽष्टाकपालं निर्वपेद् यस्याग्निः प्रादाव्येन संसृज्येतेति श्रवणेनाशुचिरग्निः स्यात् ॥ २२ ॥

## वचनादिति चेत् ॥ २३ ॥

पूर्वपक्ष्याशङ्कते । वचनात् कामयुक्तवचनात् । नाशुचित्वं न वच-नातिभार इति भावः ॥ २३ ॥

## तथेतरस्मिन् ॥ २४ ॥

मन्मते ऽपि वचनबलादसंस्कृते ऽपि होम इत्याह । तथेति ॥ २४ ॥

## उत्सर्गे ऽपि परिग्रहः कर्मणः कृतत्वात् ॥ २५ ॥

तस्य देवतार्थत्वादित्यत्र परिहारमाह । उत्सर्गइति । संस्कृता-ग्नेरुत्सर्गे ऽपि परिग्रहः देवतापरिग्रहो विरुद्धः कर्मणः देवतोद्देश्यकहो-मस्य कृतत्वात् । अन्यन्वाधानं देवतापरिग्रहार्थं नाग्निस्तदर्थः । अन्वा-धानमत्रापि क्रियतइति भावः ॥ २५ ॥

वैकारिकाग्नेराहवनीयत्वाभावः । अधि· ८ ।

## स आहवनीयः स्यादाहुतिसंयोगात् ॥ २६ ॥

वृक्षाग्रादानीतो ऽग्निः आहवनीयपदवाच्यो न वेति संशये पूर्व-

पक्षमाह । स इति । स पूर्वोक्तो ऽग्निः आहवनीयः स्यात् । आहुतिसंयोगात् । हूयते यस्मिन्निति योगसंभवात् ॥ २६ ॥

**अन्यो वोद्धृत्य हरणात् ॥ २७ ॥**

सिद्धान्तमाह । अन्य इति । धृतादुद्धृत्य हरणाद् आहवनीयः । आधानादिसंस्कृते ऽग्नौ योगरूढ आहवनीयशब्दो न योगेनान्यत्र नेतुं शक्यः पङ्कजादिवदिति भावः ॥ २७ ॥

विकारिकाग्नेराधानिकसंस्काराभावः । अधि० ६ ।

**तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २८ ॥**

पूर्वोक्ते ऽग्नौ आधानादिसंस्कारः कार्यो न वेति संशये पूर्वपक्षमाह । तस्मिन्निति । संस्कारादिकर्म आधानादि कर्तव्यं शिष्टत्वात् । सर्वकर्मशेषत्वेन विहितत्वात् । यद्याधानं न क्रियेत तस्मिन् होमो विगुणः स्यादिति भावः ॥ २८ ॥

**स्थानाद्वा परिलुप्येरन् ॥ २९ ॥**

सिद्धान्तमाह । स्थानादिति । असंस्कृताग्नेः संस्कृतस्य स्थानात् तत्स्थाने विहितत्वात् । यथा चैत्रो मैत्रकार्ये विनियुक्तः मैत्रकार्यं कुरुते मैत्रमातुरुदरान्निःसरणादि नापेक्षते तथेत्यर्थः ॥ २९ ॥

नित्यस्योख्यस्याग्नेरधारणम् । अधि० १० ।

**नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ ३० ॥**

नित्याग्नेस्तत्रैव धारणे विकल्प उत नित्यं धार्य इति संशये पूर्वपक्षमाह । नित्य इति । विकल्पः अकस्मात्प्राप्तिं विना प्रतिषेधो न स्यात् । न प्रतिसमाधीयत इति धारणप्रतिषेधः । अयं प्राप्तिपूर्वक इति धारणविधिः कल्प्यते । तथा विधिप्रतिषेधाभ्यां विकल्प इति भावः ॥ ३० ॥

**नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ ३१ ॥**

सिद्धान्तमाह । नित्य इति । गतश्रियः नित्यधारणात् । गतश्रियो नित्यधारणस्य विहितत्वात् तस्यैव प्रतिषेधः उखाग्नावुच्यते उक्तवाक्येनातो न विकल्पः ॥ ३१ ॥

सत्राहीनयोः शुक्रस्पर्शादीनामेकयजमानकर्तृकत्वम् । अधि० ११ ।

## परार्थान्येको यजमानगणे ॥ ३२ ॥

सत्रे सर्वेषां यजमानत्वाच् शुक्रं यजमानोऽन्वारभतइति यानि फलार्थानि कर्माणि तानि कर्तुं यजमानसमुच्चय इति पूर्वपक्षे सिद्धान्तमाह । परार्थानीति । स्पष्टम् ॥ ३२ ॥

अहीने शुक्रस्पर्शादौ यस्य कस्य चिद् यजमानस्य कर्तृत्वम् । अधि० १२ ।

## अनियमोऽविशेषात् ॥ ३३ ॥

एकेन यत्कार्यं तद्गृहपतिसंज्ञकेन कार्यमिति पूर्वपक्षे सिद्धान्तमाह । अनियम इति । येन केनापि कार्यम् ॥ ३३ ॥

सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वम् । अधि० १३ ।

## मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥

सत्रे याजमानं येन केनापि पठनीयमिति पूर्वपक्षे सिद्धान्तमाह । मुख्य इति । मुख्यः गृहपतिरेव । अविप्रतिषेधात् । अविरोधात् ॥ ३४ ॥

सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वम् । अधि० १४ ।

## सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३५ ॥

सत्रे अञ्जनाभ्यञ्जनादयः गृहपतिरेव उत सर्वेषामेवेति संशये पूर्वपक्षमाह । सत्रइति । गृहपतिरेव उक्तसंस्कारसंस्कृतः असंयोगात् । असंयोगाभावात् । गृहपतिं दीक्षयन्तीति वाक्ये यद्गृहपतिपदं तस्य यः असंयोगाभावः संबन्धाभावाभावः संबन्धः शक्तिरूपः स यत्र तत्त्वात् । गृहपतिशब्दशक्तिः अबाधिता भवतीति भावः । यथा होतृशब्दशक्तेरबाधाय होत्रा क्रियमाणकर्मण्येव हौत्रमिति प्रयोगः ॥ ३५ ॥

## आम्नायवचनाच्च ॥ ३६ ॥

साधकान्तरमाह । आम्नायेति । गृहपतेः फलभूयस्त्वाम्नायः । अधिकफलश्रवणरूपवचनात् । तद्वचनं च सत्रे भूयसां यजमानानां यो गृहपतिः स भूयिष्ठामृद्धिमृध्नोतीति ॥ ३६ ॥

## सर्वे वा तदर्थत्वात् ॥ ३७ ॥

सिद्धान्तमाह । सर्वेइति । सर्वे संस्कार्या एषां सप्तदशानामर्थः फलम् ॥ ३७ ॥

## गृहपतिरिति च समाख्या सामान्यात् ॥ ३८ ॥

ऋद्धिकामाः सत्रमासीरन्नित्यनेन सर्वार्थत्वात् । गृहस्य शालाया मखस्य वा प्रभुत्वं सर्वसाधारणं शब्दार्थबाधाभावः । सर्वेषां संस्कार इति भावः ॥ ३८ ॥

## विप्रतिषेधे परम् ॥ ३९ ॥

यत्र याजमानार्त्विज्ययोर्विरोधः तत्र परमार्त्विज्यमृत्विक्कर्म कार्यं ये यजमानास्त ऋत्विज इत्यनेन ऋत्विक्कर्मणः आतिदेशिकयाजमानापेक्षया प्रबलत्वादिति भावः ॥ २९ ॥

## हौत्रे परार्थत्वात् ॥ ४० ॥

एवमन्तरा प्राप्तं विषयं व्यवस्थाप्य पूर्वाधिकरणपूर्वपक्षे हौत्रवदिति हेतुद्वयं साधकत्वेन यदुक्तं तदुभयं सूत्रद्वयेन दूषयति । हौत्रइति । द्वाभ्यां हौत्रे कर्मणि होमः परार्थत्वात्कर्मार्थत्वात् । अतो होता गुणभूतः अत एकेनापि कृतं चरितार्थमभ्यञ्जनं फलसंस्कारः तत्र यजमानः प्रधानमतः प्रधानसंस्कारावृत्तिरिति भावः ॥ ४० ॥

## वचनं परम् ॥ ४१ ॥

यच्च फलभूयस्त्ववचनं तत्परमर्थवादः ॥ ४१ ॥

ब्राह्मणस्यैवार्त्विज्ये ऽधिकारः । अधि० १५ ।

## प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥

आर्त्विज्यं सर्ववर्णैः कार्यमुत ब्राह्मणैरेवेति संशये पूर्वपक्षमाह । प्रभुत्वात्सामर्थ्यात ॥ ४२ ॥

## स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥

सिद्धान्तमाह । स्मृतेरिति । कल्पसूत्रे ब्राह्मणानामार्त्विज्यमिति स्मृतेः ॥ ४३ ॥

## फलचमसविधानाच्चेतरेषाम् ॥ ४४ ॥

लिङ्गमप्याह । फलेति । यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति सोमपाननिषेधात् । ऋत्विजां सोमपानावश्यकत्वाद् नार्त्विज्यमितरेषाम् ॥ ४४ ॥

## साम्नाय्ये ऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥

साम्नाय्ये ऽपि न राजन्यो न वैश्यो वा साम्नाय्य पिबेत् असोमपीथो ह्येष इति साम्नाय्यपाननिषेधहेतुतया सोमपानानर्हत्वं दर्शयतीत्याह । साम्नाय्यइति । स्पष्टम् ॥ ४५ ॥

## चतुर्धाकरणे च निर्देशात् ॥ ४६ ॥

दर्शपूर्णमासे चतुर्धाकरणमन्त्रलिङ्गमपि ब्राह्मणस्यैवार्त्विज्यं द्रढयतीत्याह । चतुरिति । निर्देशाद् लिङ्गनिर्देशात् । ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनां नेहाब्राह्मणस्यास्तीति । इदं चतुर्धाकरणमब्राह्मणस्य नास्तीत्याह ॥ ४६ ॥

## अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

अन्वाहार्ये अन्वाहार्यार्थवादे च यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद्ब्राह्मणास्तानेव तेन प्रीणातीति दर्शनात् ॥ ४७ ॥

इति जैमिनीयसूत्रवृत्तौ शितिकण्ठविरचितायां
द्वादशाध्यायस्य चतुर्थः पादः ॥ ४ ॥

अध्यायश्च संपूर्णः १२ संपूर्णो ऽयं पूर्वमीमांसाग्रन्थः ॥ ० ॥

श्रीमज्जैमिनिसूरिसूत्ररचना गम्भीरभावा क्व च ।
क्वाहं मन्दमतिस्तथा ऽपि च गुरोः पादाम्बुजं चिन्तयन् ॥
बुद्धेर्मान्द्यमपास्य भावमलिखं संक्षेपतः पण्डिताः ।
यत्र क्व स्खलितं विशोध्य सगुणां कुर्वन्तु मत्प्रीतये ॥ १ ॥
स्मर्त्वद्रिक्ष्मामिते शालिवाहशाके ऽविमुक्तके ।
सहस्यसितपक्षे ऽथ द्वितीयायां रवौ निशि ॥ २ ॥
रामेश्वरः सूत्रवृत्तिं निर्मायाथ यथामति ।
अन्नपूर्णाविश्वभर्तृचरणे ऽर्पितवान् मुदे ॥ ३ ॥
गुरुत्वं च पितृत्वं च यत्रैकत्र स्थितं मम ।
वन्दे तच्चरणाम्भोजे ते एव शरणं मम ॥ ४ ॥

एते श्लोका अधिका गोविन्ददासगुप्तपुस्तके उपलभ्यन्ते ।

---

